# Document Information

Text title : chaNDiikavacham
File name : chaNDiikavacham.itx
Category : kavacha
Location : doc_devii
Author : Traditional
Language : Sanskrit
Subject : philosophy/hinduism/religion
Transliterated by : Ravin Bhalekar ravibhalekar at hotmail.com
Proofread by : Ravin Bhalekar ravibhalekar at hotmail.com
Description-comments : vArAhapurANe
Latest update : May, 15, 2006
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ चण्डीकवचम् ॥

श्रीगणेशाय नमः ।
अस्य श्रीचण्डीकवचस्य ब्रह्मा ऋषिः , अनुष्टुप् छन्दः ,
चामुण्डा देवता , अङ्गन्यासोक्तमातरो बीजम् ,
दिग्बन्धदेवतास्तत्वम् , श्रीजगदम्बाप्रीत्यर्थे जपे विनियोगः ।
ॐ नमश्चण्डिकायै ।
ॐमार्कण्डेय उवाच ।
ॐयद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ।
यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ १॥

ब्रह्मोवाच ।
अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् ।
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २॥

प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी ।
तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥ ३॥

पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च ।
सप्तमं कालरात्रिश्च महागौरीति चाष्टमम् ॥ ४॥

नवमं सिद्धिदात्री च नवदुर्गाः प्रकीर्तिताः ।
उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ ५॥

अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे ।
विषमे दुर्गे चैव भयार्ताः शरणं गताः ॥ ६॥

न तेषां जायते किञ्चिदशुभं रणसङ्कटे ।
नापदं तस्य पश्यामि शोकदुःखभयं नहि ॥ ७॥

यैस्तु भक्त्या स्मृता नूनं तेषां सिद्धिः प्रजायते ।
प्रेतसंस्था तु चामुण्डा वाराही महिषासना ॥ ८॥

ऐन्द्री गजसमारुढा वैष्णवी गरुडासना ।
माहेश्वरी वृषारुढा कौमारी शिखिवाहना ॥ ९॥

ब्राह्मी हंससमारुढा सर्वाभरणभूषिता ।
नानाभरणशोभाढ्या नानारत्नोपशोभिता ॥ १०॥

दृश्यन्ते रथमारुढा देव्यः क्रोधसमाकुलाः ।
शङ्खं चक्रं गदां शक्तिं हलं च मुसलायुधम् ॥ ११॥

खेटकं तोमरं चैव परशुं पाशमेव च ।

कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम् ॥ १२॥

दैत्यानां देहनाशाय भक्तानामभयाय च ।
धारयन्त्यायुधानीत्थं देवानां च हिताय वै ॥ १३॥

महाबले महोत्साहे महाभयविनाशिनी ।
त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ॥ १४॥

प्राच्यां रक्षतु मामैन्द्री आग्नेयामग्निदेवता ।
दक्षिणेऽवतु वाराही नैरृत्यां खड्गधारिणी ॥ १५॥

प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी ।
उदीच्यां रक्ष कौबेरि ईशान्यां शूलधारिणी ॥ १६॥

ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा ।
एवं दश दिशो रक्षेच्चामुण्डा शववाहना ॥ १७॥

जया मे अग्रतः स्थातु विजया स्थातु पृष्ठतः ।
अजिता वामपार्श्वे तु दक्षिणे चापराजिता ॥ १८॥

शिखां मे द्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता ।
मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी ॥ १९॥

त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके ।
शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी ॥ २०॥

कपोलौ कालिका रक्षेत्कर्णमूले तु शाङ्करी ।
नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका ॥ २१॥

अधरे चामृतकला जिह्वायां च सरस्वती ।
दन्तान् रक्षतु कौमारी कण्ठमध्ये तु चण्डिका ॥ २२॥

घण्टिकां चित्रघण्टा च महामाया च तालुके ।
कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमङ्गला ॥ २३॥

ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी ।
नीलग्रीवा बहिःकण्ठे नलिकां नलकूबरी ॥ २४॥

खड्गधारिण्युभौ स्कन्धौ बाहू मे वज्रधारिणी ।
हस्तयोर्दण्डिनी रक्षेदम्बिका चाङ्गुलीस्तथा ॥ २५॥

नखाञ्छूलेश्वरी रक्षेत् कुक्षौ रक्षेन्नलेश्वरी ।
स्तनौ रक्षेन्महालक्ष्मीर्मनःशोकविनाशिनी ॥ २६॥

हृदये ललितादेवी उदरे शूलधारिणी ।

नाभौ च कामिनी रक्षेद्गुह्यं गुह्येश्वरी तथा ॥ २७॥

कट्यां भगवती रक्षेज्जानुनी विन्ध्यवासिनी ।
भूतनाथा च मेढ्रं मे ऊरू महिषवाहिनी ॥ २८॥

जङ्घे महाबला प्रोक्ता सर्वकामप्रदायिनी ।
गुल्फयोर्नारसिंही च पादौ चामिततेजसी ॥ २९॥

पादाङ्गुलीः श्रीर्मे रक्षेत्पादाधस्तलवासिनी ।
नखान्दंष्ट्राकराली च केशांश्चैवोर्ध्वकेशिनी ॥ ३०॥

रोमकूपेषु कौबेरी त्वचं वागीश्वरी तथा ।
रक्तमज्जावमांसान्यस्थिमेदांसी पार्वती ॥ ३१॥

अन्त्राणि कालरात्रिश्च पित्तं च मुकुटेश्वरी ।
पद्मावती पद्मकोशे कफे चुडामणिस्तथा ॥ ३२॥

ज्वालामुखी नखज्वाला अभेद्या सर्वसन्धिषु ।
शुक्रं ब्रह्माणी मे रक्षेच्छायां छत्रेश्वरी तथा ॥ ३३॥

अहङ्कारं मनो बुद्धिं रक्ष मे धर्मचारिणि ।
प्राणापानौ तथा व्यानं समानोदानमेव च ॥ ३४॥

यशः कीर्तिं च लक्ष्मीं च सदा रक्षतु वैष्णवी ।
गोत्रमिन्द्राणी मे रक्षेत्पशून्मे रक्ष चण्डिके ॥ ३५॥

पुत्रान् रक्षेन्महालक्ष्मीर्भार्यां रक्षतु भैरवी ।
मार्गं क्षेमकरी रक्षेद्विजया सर्वतः स्थिता ॥ ३६॥

रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु ।
तत्सर्वं रक्ष मे देवि जयन्ती पापनाशिनी ॥ ३७॥

पदमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः ।
कवचेनावृतो नित्यं यत्र यत्राधिगच्छति ॥ ३८॥

तत्र तत्रार्थ लाभश्च विजयः सार्वकामिकः ।
यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ॥ ३९॥

परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् ।
निर्भयो जायते मर्त्यः सङ्ग्रामेष्व पराजितः ॥ ४०॥

त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान् ।
इदं तु देव्याः कवचं देवानामपि दुर्लभम् ॥ ४१॥

यः पठेत्प्रयतो नित्यं त्रिसन्ध्यं श्रद्धयान्वितः ।
दैवी कला भवेत्तस्य त्रैलोकेष्व पराजितः ॥ ४२॥

जीवेद्वर्षशतं साग्रमपमृत्यु विवर्जितः ।
नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः ॥ ४३॥

स्थावरं जङ्गमं वापि कृत्रिमं चापि यद्विषम् ।
अभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले ॥ ४४॥

भूचराः खेचराश्चैव जलजाश्चोपदेशिकाः ।
सहजाः कुलजा मालाः शाकिनी डाकिनी तथा ॥ ४५॥

अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः ।
ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः ॥ ४६॥

ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः ।
नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते ॥ ४७॥

मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकरं परम् ।
यशसा वर्धते सोऽपि कीर्तिमण्डितभूतले ॥ ४८॥

जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा ।
यावद्भूमण्डलं धत्ते सशैलवनकाननम् ॥ ४९॥

तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रकी ।
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ॥ ५०॥

प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः ॥ ५१॥

॥ इति श्रीवाराहपुराणे हरिहरब्रह्मविरचितं देव्याः कवचं सम्पूर्णम् ॥

Encoded and Proofread by Ravin Bhalekar ravibhalekar@hotmail.com



.. chaNDIkavacham ..
was typeset on July 25, 2016